द्वाभ्यां व्यवस्थितो धर्मो दानेनादरणेन च।
गुरूक्तिस्त्वानुभूतिभ्यां द्वाभ्यां मोक्षो व्यवस्थितः ॥ २४ ॥

२४. धर्मः दानेन आदरणेन च व्यवस्थितः इति प्रथमप्रश्नस्य उत्तरम्। दानद्वारा एवधर्मं संपादयितुं शक्यम्। परन्तु प्रीतिपूर्वकतया यदि दानं दीयते तदानीमेव स धर्मः धर्मः भवति। अनादरेण कृतं दानं धर्मं न स्थिरीकरोति इत्यर्थः

गुरोः उपदेशः तदनुष्ठानं च मोक्षसंपादने कारणे भवतः। गुरुसमीपं गत्वा तत्रोपविश्य उपदेशश्रवणमात्रेण मोक्षः न लभ्यते। शिष्यः यदि श्रद्धया तदनुष्ठानं न करोति तदा मोक्षः नैव सिध्यति। श्रद्धया तदनुष्ठानेन मोक्षः जायते। गुरूक्तितदनुष्ठाने च द्वे मोक्षसाधनं इत्युत्तरम्।

कामस्तु लज्जामानाभ्यां पर्जन्याच्च कृषेर्धनम्।
द्विचतुष्कं [1]चतुर्धा च ज्ञेयमित्थं मनीषिभिः ॥ २५ ॥

२५- लज्जा अभिमानश्च कामस्थिरीकरणे मुख्यतम इति तृतीय प्रश्नस्य उत्तरम। लज्जामानसहितः कामः आनन्ददायकः भवति। लज्जामान-रहितः कामः आनन्दविनाशकारी भवति। अतः लज्जया मानेन च कामः अनुभोक्तव्यः इति तात्पर्यम् न तद्राहितेन इति भावः।

द्वे जानन्ति [2]नरास्सर्वे द्वे जानन्ति नरोत्तमाः।
द्वे [3]जानन्नस्ति वा नो वा श्रीनिवासकृतं महत ॥ २६ ॥

२६. सर्वे नराः के द्वे जानन्ति इति सामान्याकारेण प्रथमः प्रश्नः पुरुषश्रेष्ठं के द्वे जानन्ति इति विशेषाकारेण द्वितीयप्रश्नः। द्वे के जानन्ति वा न जानन्ति वा इति तृतीयः प्रश्नः।

द्वे जानन्ति [4]जनास्सर्वे [5]अशनं शयनं तथा।
श्रवणं मननं चैव द्वे जानन्ति नरोत्तमाः ॥ २७ ॥

1 चतुर्धा—'क'
2 जनास्सर्वे—ल
3 द्वे जानन्ति जना नो वा—ग
4 नरासर्वे—ग
5 अशयं-क

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

२७. अशनं शयनं च सर्वे नराः जानन्ति इति प्रथमप्रश्नस्य उत्तरम्। अत्र कविः नरान् सामन्यः श्रेष्ठः इति द्विधा विभज्य प्रथमतः सामान्यनराणां लक्षणं सूचयति। किमिति चेत् सर्वे सामान्यजनाः भक्ष्यभोज्यतल्पशयनानि सर्वस्वमिति जनन्ति। परमेतत् मोक्षोपयोगि यत् किञ्चित् अपि साधनं न इत्यर्थः

पुरुषश्रेष्ठाः नरोत्तमाः मोक्षोपयोगिवेदोपनिषत्श्रवणानन्तरं मनसि तच्चिन्तनं कृत्वा स्वर्गमाप्नुवन्ति इति पुरुषोत्तमानां लक्षणं कविना उदाहृतं अत्र द्वितीयप्रश्नस्य उत्तररूपेण।

द्वे[1] जानन्नस्ति वा नो वा भागधेयं कवेश्च हृत्।
वस्तुद्वयत्रिकं त्रेधा ज्ञेयमित्थं मनीषिभिः ॥ २८ ॥

पञ्चाशत्प्रश्निकामेतां प्रस्तावविहित्तोत्तराम्।
श्रीनिवासेन कथितां स्वीकुर्वन्तु मनीषिणः ॥ २९ ॥

[2]इति श्रीनिवासविरचिते प्रश्नोत्तरसुभाषिते
पञ्चाशत्प्रश्निकाख्यः प्रथमः क्रमः।

प्रथमक्रमसमाप्तौ कविः बहुशः तस्य सन्देशम् इत्थं सूचयति। नरा वा नरश्रेष्ठाः वा सर्वान विषयान् ज्ञातुं शक्ताः स्युः। परन्तु ते नराः द्वयोर्विषययोः निस्सहयकाः भवन्ति। एकम अदृष्टं द्वितीयन्तु कवेः हृदयम् इति। किमर्थमिति चेत् न दृष्टत्वात् अदृष्टं वा (भागधेयं) ज्ञातुं न शक्यम "नानृषिः कुरुते काव्यम्" "कविः एकः प्रजापति" इत्यादिवचनात् कविहृदयं ज्ञातुं अशक्यम् इति। एवं च सर्वे अदृष्टायत्ताः इति भावः।

1 द्वे जानन्ति जना नो वा भागधेयम्—'ग'
2 इति इत्यारभ्य प्रथमः क्रमः इत्यन्तो भागः 'ल' तथा ग प्रत्योः नास्ति

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

# प्रश्नाभिन्नोत्तररत्नमालिका

## द्वितीयः क्रमः

श्रीश्रीनिवासकविसार्वभौमरचितप्रश्नाभिन्नोत्तररत्नमालिकाप्रारम्भः

[1]वाग्देव्याः पादयुगळं ध्यात्वा [2]वन्नाख्यसूरिणा ।
सुलभा क्रियते व्याख्या प्रश्नाभिन्नोत्तरावळेः ॥

श्रीमत्यमरसिंहभूपतौ चोळराष्ट्रमनुशासति सति [3]विद्वन्मण्डनायमानेन पञ्चनदक्षेत्रवासिना भाष्यकुप्पाभिधानसूरिणा 'कंसं जघान कृष्ण' इति प्राक्तनं श्लोकं व्यपदिश्य परीक्षितः श्रीनिवासनामा महाकविः प्रश्नाभिन्नोत्तरावळिसंज्ञिकां कृतिमद्भुतां रचयति स्म । प्राक्तनश्लोको यथा ।

कं संजघान कृष्णः का शीतलवाहिनी गङ्गा ।
के दारपोषणरताः कं बलवन्तं न बाधते शीतम् ॥

[4]स्पष्टोऽर्थः । श्लोकेऽस्मिन् प्रतिष्ठितः प्रश्नाभिन्नोत्तरालङ्कारः प्रायशः दुर्घट एवेत्यनुमीयते । यतः अलंकारशास्त्रे लक्षणप्रसक्तावपि लक्ष्यस्य अनन्यथासंभवः
तथा हि—

प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुत्तरम् ।
के दारपोषणरताः के खेटाः किं चलं वयः ॥

अतः प्रश्नाभिन्नमुत्तरं सामान्यं कविभिः दुर्घटमेवेत्यभिप्रेत्य क्रियमाणकृतेः अतिशयप्राशस्त्यम् आद्यश्लोके प्रतिपादयति या स्यादिति—

या स्याद्विशेषगणिता सकलैर्देशाधिपैश्च दिक्पतिभिः ।
तां श्रीनिवासकविरथ प्रश्नाभिन्नोत्तरावळिं [5]भणति ॥ १ ॥

---

1 वाग्देव्याः इति मंगलपद्यात् प्राक् ग प्रतौ ल प्रतौ विद्यमाना प्रश्नोत्तररत्नमालिका इत्यारभ्य प्रारंभः इति पर्यन्तः भागः क प्रतौ न दृश्यते
2 रत्नाख्यसूरिणा–ग
3 विद्वन्मण्डलमण्डनायमानेन–ग
4 स्पष्टोऽर्थः इत्यतः प्राक् किमिति पदं ग. प्रतौ दृश्यते ।
5 फणति–ल

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

[1]या स्यादिति। सकलैः देशाधिपैः दिक्पतिभिश्च विशेषगणिता अधिकसंमानिता या स्यात्। भवितुं शक्नुयात् शकि लिङ्। [2]तथाभूतां प्रश्नाभिन्नोत्तरावळिं प्रश्नेभ्यः अभिन्नान्युत्तराणि तेषाम् आवळिम्। अथ कतिपयग्रन्थरचनानन्तरं श्रीनिवासकविः [3]भणति ग्रथ्नातीत्यर्थः। अत्र कृतेः कृतं प्रशंसनं न केवलं जगन्मनोहरता प्रतिष्ठाप्रकाशनार्थकं किन्तु प्रशंसनाव्याजेन वक्ष्यमाणप्रश्नाभिन्नोत्तरवाक्यानां परिमितिः प्रदर्शितास्ति। देशानां षट्पञ्चाशत्[4]संज्ञाकत्वेन दिक्पतीनाम् अष्टसंख्याकत्वेन द्वौ शेषौ यस्मिन् कर्मणि [5]यथातथाद्विशेषमिति श्लेषमहिम्ना च आहत्य षट्षष्टिसंख्या बोध्या असौ नीतिः तृतीयेंद्रौ तृतीयगणस्य पञ्चमात्राकत्वेन दोषावहेति न शङ्कनीयम्

*पादादाविह वर्णस्य संयोगः क्रमसंज्ञिकः।
पुरस्स्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः॥ इति लक्षणात्।
**'अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति'।

इत्याद्युदाहरणाच्च कविरथेति तत्रत्यो [6]गणश्चतुर्मात्राक एवेति सिद्धम्। [7]इतः षोडश अनुष्टुप् श्लोकाः ततो गीतिद्वयं रथोद्धतावृत्तमेकं च। इत्थं विंशतिश्लोकात्मकम् अस्याः कृतेः प्रमाणं ज्ञेयम्। अथ मङ्गळं चिकीर्षाभिप्रायेण इष्टदेवतास्तवनात्मकं वाक्यं पुरस्कृत्य आह मानायक इति।

मानायकः प्रभुस्सेव्यः कामनाग्लानिरुज्झ्यताम्।
लक्ष्मीः कञ्जगृहे वासं कं नरेशपदं महत् ॥ २॥

व्याख्या—मानायक इति। कः प्रभुः मानाय मानं रक्षितुं सेव्य सेवितुं योग्यः इति प्रश्नः।

---

1 या स्यादिति ग प्रतौ न दृश्यते।
2 तथाभूता इत्यतः प्राक् शकिलिङ् इति पदं ग प्रतौ नास्ति।
3 फणति–ल
4 संज्ञाकत्वेन दिक्पतीनाम् अष्टसंख्याकत्वेन इति भागः ग प्रतौ न दृश्यते।
5 यथातथाविशेषमिति शब्दमहिम्ना च आहत्य षष्टिसंख्या संबोध्या असौ गीतिः–ग
6 चतुर्मात्राद्धवेति सिद्धं ततो गीतिद्वयं रथोद्धतमेकञ्च इतः–ग
7 इतः षोडश इत्यारभ्य वृत्तमेकं च इति पर्यन्तः भागः ग प्रतौ न दृश्यते।
* वृ र–I–10
** वृ र–I–11

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मायाः—लक्ष्म्या नायकः मानायकः विष्णुः प्रभुस्सेव्य इत्युत्तरम् [1]एकमेव। वाक्यं श्लेषमहिम्ना द्वेधा प्रभवति *'इन्दिरालोकमाता मा रमा मङ्गलदेवता' इति अमरः लक्ष्मीपतित्वात् [2]मानरक्षणे समर्थ इति विशेष्यस्य साभिप्रायत्वात् परिकराङ्कुरालङ्कारः। **'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति लक्षणात्

का ग्लानिः मनाक् ईषदपि उज्झ्यताम्। न ध्यायतमिति प्रश्नः। कामनया वाञ्छया जायमाना ग्लानिः कामनाग्लानिः। चिरादौर्बल्यम्। उज्झ्यतम् इत्युत्तरम्। उभयत्र जनैरिति शेषः। भगवन्तमाराध्य निष्कामतया स्थेयमिति भावः। लक्ष्मीः कं वासस्थानं [3]जगृहे इति प्रश्नः। लक्ष्मीः कंजगृहे। कंजं। कमलं तदेव गृहं तस्मिन् वासं जगृहे इत्युत्तरम्। प्रश्नगता जगृहे इति क्रिया उत्तरेऽप्यनुवर्तते। न किञ्चिदपि वस्तु अनवरत-लक्ष्मीविलासजुष्टमिति भावः। [4]महत् श्रेष्ठं सत्। नरेशपदं राज्ञामधिष्ठानं किमिति प्रश्नः। किन्नरेशपदं कुबेरस्थानं महदित्युत्तरम्। '***किन्नरेशो वैश्रवण' इत्यमरः

राजराजं कुबेरं विना [5]सर्वराजन्यानां क्लृप्तभवत्वेन जघन्यमेवेति भावः। कंसं जघान कृष्ण इति प्राक्तनश्लोके वाक्यानां मिथः अर्थसंबन्धो नैव विद्यते। अत्र प्रतिश्लोकं विद्यते इति विशेषः। विस्तरभयादितः संग्रहेण यथोपात्तं स्थूलदृष्ट्या व्याख्यास्यामः। काशासन इति।

काशासने तपः सिद्धिः केशान्ततनुबुद्धयः।
काश्यामाराध्यतां काळी प्राहुः कं कालहारिणम् ॥ ३ ॥

काशासनेति—शासने निग्रहानुग्रहविधौ तपः सिद्धिः केति प्रश्नः। काशासने दर्भासने उपविश्य क्रियमाणा तपःसिद्धिरित्युत्तरम्। दर्भस्य

1 एक एव
2 मानरक्षणे विशेष्यस्य–ग
3 जगृहेत् गृहीदिति प्रश्नः–'ग'
4 महदिति श्रेष्ठं नरेशपदं–'ग'
5 सर्वराजन्यानां पदंक्लृप्तविभवत्वेन–ग
* अ. को I-1-30
** च. अ 58
*** अ. को I-1-78

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

अतिपावनत्वादिति भावः। शान्ततनुबुद्धयः तनुरहमिति बुद्धिः तनुबुद्धि येषान्ते शान्ततनुबुद्धयः। देहाहंभावरहिताः के इति प्रश्नः केशान्ततनुबुद्धयः वालाग्रसदृशसूक्ष्मधियः इत्युत्तरं। श्यामा यौवनमध्यस्था, यौवनमध्यस्था काळी पार्वती काराध्यतामिति प्रश्नः। काश्यां विद्यमाना काळी विशालाक्षी आराध्यतामित्युत्तरम्। उभयत्र बुधैरिति शेषः। क्षेत्रमाहात्म्यात् दैवतं क्षिप्रं प्रसीदतीति भावः। कालं हरति त्रिकालहारी तं कालहारिणं मृत्युनिवारणं कं प्राहुः कथयन्तीति प्रश्नः कङ्कालमयश्चासौ हारश्च कंकालहारः, सोऽस्यास्तीति कंकालहारी तम् अस्थिमालाधरं महादेवं प्राहुरित्युत्तरम्।

*'स्याच्छरीरास्थि कङ्कालः' इत्यमरः। उभयत्र जना इति शेषः। मार्कण्डेयस्य मृत्युभयभंजनादिति भावः

कुतो दर्पो नरेन्द्राणां को दण्डनिपुणो नृपः।
राजपूज्याः के तु पटाः का रणाढ्या चमूर्जयेत् ॥ ४ ॥

कुत इति नरेन्द्राणां दर्पः। कुत इति प्रश्नः। कुतः पृथिवीशासनात् नरेन्द्राणां दर्पः इत्युत्तरम्

**'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः

दण्डनिपुणः सामदानभेदेभ्यः परः यो दण्डोपायस्तस्मिन् निपुणः नृपः कः इति प्रश्नः कोदण्डनिपुणः धनुर्विद्यापारंगतः नृप इत्युत्तरम्। राजपूज्या. पटास्तु के इति प्रश्नः केतुषु ध्वजेषु विद्यमानाः [1]पटाः ते राजपूज्या इत्युत्तरम्। जयेषुभिः नृपैः युद्धोपक्रमे ध्वजाः पूज्यन्ते इत्याशयः। का चमूः सेना रणाढ्या सती जयेदिति प्रश्नः। कारणैः देशकालानुगुण-तत्तत्साधनैः आढ्या समृद्धा चमूः जयेदित्युत्तरम्।

के बलाढ्याः [2]प्रशंस्यं तां का मितोक्तिर्हिता भवेत्।
किं करस्थं धनं कार्यं का मान्याप्रीतिरेधते ॥ ५ ॥

---

1 पटाः केतुपटाः राज्यपूज्याः–ग
2 प्रशंसनां
* अ को–II-6-335
** अ. को–II-2-3

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

के बलाढ्या इति। बलाढ्याः वीर्यवन्तः के प्रशस्यन्ताम् इति प्रश्नः। केवलम् अत्यन्तम् आढ्याः संपन्नजनाः प्रशंस्यन्ताम् इत्युत्तरम्। वबयोरभेदः। मिता परिमिता [1]उक्तिः फणितिः का हिता इष्टा भवेदिति प्रश्नः। कामितस्य ईप्सितार्थस्य उक्तिः इष्टा भवेदित्युत्तरं, करस्थंधनं किं कार्यमिति प्रश्नः। धनं किंकरस्थं सेवकेषु उपयुक्तं कार्यमित्युत्तरम्। का प्रीतिः मान्या सती एधत इति [2]प्रश्नः। कामादन्या कामान्या याचनाव्यतिरिक्ता प्रीतिरेधत इत्युत्तरम्।

[3]रहस्येकस्सखा ग्राह्यो भावि का निर्णयेन्मतिः।
कोपकारी न संभाष्यः सुरापं को वशं नयेत् ॥ ६॥

रहस्य इति। रहसि एकान्ते कस्सखा ग्राह्य इति प्रश्नः। [4]रहसि सखा एकः ग्राह्य इत्युत्तरम् का मतिः भावि भविष्यत्कृत्यं निर्णयेत्।

इदमित्थमिति निश्चिनुयादिति प्रश्नः। भाविका [5]भववती रसज्ञा मतिः निर्णयेदित्युत्तरम्। अपकारी कः न संभाष्यः इति प्रश्नः। कोऽपकारी [6]क्रोधनशीलः खलः न संभाष्य इत्युत्तरम्। अपकारस्य मूलं कोप एवेति भावः। सुरापं मद्यपायिनं कः वशं नयेत् [7]स्वाधीनं प्रापयेदिति प्रश्नः। [8]सुरायाः पङ्कः कर्दमः वशं नयेदित्युत्तरम्। *'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरः। सुर इव अपङ्कः [9]निष्पापः वशं नयेदिति च भावः।

अवशं कां भजेन्मूर्खः का च कान्तिः कनीयसी।
आर्तः कां तारयेद्वाञ्छां धूर्तधीः का सरेद् बहिः ॥ ७॥

---

1 उक्तिः का हिता–ग
2 प्रश्नः कामान्य–ग
3 रहस्येकसकृद् ग्राह्यो–ग। रहस्येकस्सखा–ल
4 रहस्येकः सखा एकः–ग
5 भासवति सारज्ञामति–ग
6 क्रोधशील· ग
7 स्वाधीनतां–ग
8 सुरायाः पङ्कः कर्दमः इत्यारभ्य इत्यमरः इत्यन्तो भागः ग प्रतौ न दृश्यते।
9 निष्पापः देवोपमः सुकृतवान् यस्य एव वशं नयेदित्युत्तर ्। अस्त्री पङ्क पुमान् पाप्मेत्यमरः वशं इति पर्यन्तो भागः केवल 'ग' प्रतौ दृश्यते
* अ. को. I–4–147

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

अवशमिति— मूर्खः अवशं उच्छृंखलं यथा तथा कां भजेदिति—प्रश्नः। मूर्खः अवशं कां दुराक्षेपरचनां भजेदित्युत्तरम्। अपि च। कनीयसी कान्तिः केति प्रश्नः। [1]काचस्या मृद्भेदकृतर्मणिविशेषस्य कान्तिः कनीयसी कनिष्ठेत्युत्तरम्। आर्तः व्याधिपीडितः कां वाञ्छां कारयेत्। पारं प्रापयेदिति [2]प्रश्नः। वाञ्छां कान्तारमिव आचरेत्। [3]कान्तारयेदिति प्रश्नः। वाञ्छां कान्तारमिव आचरेत्। कान्तारयेत् निष्फलतया [4]प्रवर्धयेत् इत्युत्तरम्। धूर्तस्य [5]कार्याकार्यमजानतो जनस्य धीः धूर्तधीः का बहिः सरेत्। प्रकाश-माप्नुयादिति प्रश्नः। धूर्तधीः बहिः कासर इव [6]आचरेत् कासरेदित्युत्तरम्।

*' लुलायो महिषो वाहद्विषत्कासरसैरिभा ' इत्यमरः। कासरो यथा न किञ्चिद्विचिन्त्य महाहृदे पतिष्यति तथेति भावः।

को शल्यदौ स्तां पितरौ का व्यासक्तिः प्रतिष्ठिता।
नदीप्राया च कात्युक्तिः सुखी स्यात्को विदेशभाक् ॥ ८॥

कौशल्यदाविति—शल्यं द्यतः खण्डयतः इति शल्यदौ दुःखपरिहारकौ पितरौ कौ स्तां भवेतामिति प्रश्नः। कौशल्यं दत्त इति कौशल्यदौ विद्याप्रदौ पितरौ स्तामित्युत्तरम्। कुशलस्य भावः कौशल्यम्। ब्राह्मणादित्वात् ष्यञ्। प्रतिष्ठिता व्यासक्तिः विशेषासक्तिः केति प्रश्नः काव्ये विद्यमाना आसक्तिः काव्यासक्तिः प्रतिष्ठितेत्युत्तरम्। अपि च का अत्युक्तिः अधिकोक्तिः नदीप्राय-प्रवाहसदृशीति प्रश्नः। नदीप्रा [7]अतेजस्वी याचकस्य अत्युक्तिः याचकात्युक्ति-रिति उत्तरम्। विदेशभाक् अपरिचितदेशगतः कस्सुखी स्यादिति प्रश्नः कोविदश्चासौ ईशश्च कोविदेशः कं भजतीति भाक् विद्वत्प्रभुमाश्रितः सुखी स्यादित्युत्तरम् *सन् सुधीः कोविदो बुधः इत्यमरः।

---

1 काचस्य कान्तिः या च कान्तिः काचा मृद्कृता मणिविशेषः तत कान्तिः कनीयसी। मुनिश्रेष्ठः इत्युत्तरम् आर्तः व्याधि—ग
2 प्रश्नः आर्ततां वाञ्छा—ग
3 कान्तारयेत् इत्यारभ्य आचरेत् इति पर्यन्तो भागः ग प्रतौ न दृश्यते।
4 प्रार्थयेत्।
5 मजानतो तस्य धीः।
6 आचरेत् इत्युत्तरं।
7 अतेजस्का याचकस्यात्युक्ति—ग
* अ. को. II-5-224
** अ को-II-7-410

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

कासारभूमिवृक्षाणां [1]नीरसेकोन्यसेद्वनम ।
पथिकैः कांक्षतेच्छाया कंदरं नातपो दहेत ॥ ९ ॥

[2]कासार इति वृक्षाणां कासारभूमिः सरः प्रान्तभूमिरित्युत्तरम। नीरसे निर्जलस्थले वनं कः न्यसेत् प्रतिष्ठापयेदिति प्रश्नः। नीरस्य उदकस्य [3]सेकः वनं न्येसेदित्युत्तरम्। पथि मार्गे छाया कैः काङ्क्षत इति प्रश्नः। पथिकैः पान्थैः छाया काङ्क्षत इत्युत्तरम। आतपः दरं स्वल्पमपि कं न दहेदिति प्रश्नः। आतपः कन्दरं गुहां न दहेदित्युत्तरम। *'दरीतु कन्दरो वा स्त्री' इत्यमरः

अवनौ कस्य दुर्गोऽब्धिः कोटिताढ्यस्समृद्धिमान् ।
[4]निर्बला का घनततिः वर्षोत्कर्षे स्रवन्ति काः ॥ १० ॥

अवनाविति-अवनौ भूलोके अब्धिः कस्य दुर्गः गन्तुमशक्यः इति प्रश्नः। अब्धिः अवनौकस्य नष्टनौकस्य दुर्ग इत्युत्तरम्। कः आढ्यः समृद्धिमान् अटिता सञ्चरेत् इति प्रश्नः। अटपटगतौ लुट्। कोटिः कोटिद्रव्यस्य तमः कोटिता। तया [5]आढ्यः कोटिताढ्यः कोटिद्रव्योपार्जकः समृद्धिमान् [6]अटिता इत्युत्तरम्। का घनततिः मेघपङ्क्तिः निर्बला शिथिलेति प्रश्नः। निर्गताः [7]बलाका पक्षिविशेषाः यस्यास्सा [8]निर्बलाका बलाकाभिवर्जिता घनततिरित्युत्तरम्। वर्षास्वेव [9]बलाकाभ्युदय इति [10]प्रसिद्धिः। काः वर्षोत्कर्षे वृष्ट्यतिशये स्रवन्ति प्रवहन्तीति प्रश्नः। स्रवन्तिका नद्यः वर्षोत्कर्षे स्रवन्तीत्युत्तरम्। प्रश्नगता स्रवन्तीति क्रिया उत्तरेऽप्यनुवर्तते। **'स्रवन्ती निम्नगाऽऽपगा' इत्यमरः

---

1 कोऽन्यसेवनम्—ग
2 कासार इति वृक्षाणां सारभूमिः केति प्रश्नः वृक्षाणां ग
3 नीरस्य सेकः नीरसेकः जलसेचनव्यापारः वनं—ग
4 निर्जला का घनततिः-ग
5 आढ्यः कोटिद्रव्योपार्जित-ग
6 अटितेत्युत्तरं प्रश्नगता अटितेति क्रिया उत्तरेऽप्यनुवर्तते। का घनततिः इति भागः ग प्रतौ दृश्यते।
7 जलौकाः ग
8 निर्जलाका जलाकाभिः-ग
9 जलाका-ग
10 प्रसिद्धं-ग
* अ को-II-3-47
** अ को I-12-287

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

कंदळौवं लतेति प्राङ्मृद्वीका श्लाध्यतेलता।
सकलं कं विधुं प्राहुः दिशोव्यक्ताः प्रभान्तिका ॥ ११ ॥

[1]लता प्राक् प्रथमदळौघं पत्रसमूहं कम् एति प्राप्नोतीति प्रश्नः। कंदळौवं किसलयसमूहं प्राक् एतीत्युत्तरम्। का लता मृद्वी श्लाध्यते इति [2]प्रश्नः। [3]मृद्वीका द्राक्षालता श्लाध्यते इत्युत्तरम्। *'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः।

कं विधुं [4]चन्द्रं सकलं पूर्णम् अथवा कलाभिस्सहितं प्राहुरिति प्रश्नः। सकलंक कलंकयुक्तं विधुं प्राहुः इत्युत्तरम्। जना इति शेषः। काः दिशः व्यक्ताः प्रभान्तीति प्रश्नः। प्रभान्तिकाः प्रभा अन्तिके समीपे यासान्ताः प्रभान्तिकाः एवं भूता दिशः व्यक्ताः प्रभान्तीत्युत्तरम्। प्रश्नगतप्रभान्तीति क्रिया उत्तरेऽप्यनुवर्तते।

अपांश्रीः कैरवस्थानैः साराका रात्रिरुच्यते।
स्याच्चकोरसदृग्धीमान् केकालाभगळाः खगाः ॥ १२ ॥

अपामिति-अवतिष्ठन्तीत्यव्यवस्थानानि विषया इत्यर्थः। कैः अवस्थानैः विषयैः अपाम् उदकानां श्रीः कान्तिरिति प्रश्नः। कैरवस्थानैः कैरवाणां [5]कुमुदानां वर्तनैः अपां श्रीरित्युत्तरम्। का रात्रिस्सारा [6]उत्कृष्टा उच्यते इति प्रश्नः। सा प्रसिद्धा राकारात्रिः राकायाः [पू [7]]र्णिमातिथेः रात्रिः उच्यते इत्युत्तरम्। उभयत्र जनैरितिशेषः। अपि च [8]रसेदृक् ज्ञानं यस्य सः रसदृक् गुणज्ञः। एवं भूतः धीमान् कस्स्यादिति प्रश्नः। चकोरेण सदृक् यः धीमान् कस्स्यादिति प्रश्नः। चकोरेण सदृक् यः धीमान् स स्यादित्युत्तरम्। हिमकरकिरणेभ्यः [9]सुधाहरणचतुरिमाणं चकोर एव कलयति न हि सर्वे

1 कंदळौघमिति लता प्राक्-ग
2 प्रश्नः लताकंदळौघ का कंदळौघं किसलय समूहं कंदलं प्राक्-ग
3 मृद्वीका लता द्राक्षालता इत्युत्तरम् उभयत्र जनैरिति शेषः मृद्वीका गोस्तनी द्राक्षा-ग
4 चन्द्रप्राहुरिति प्रश्नः सकलं पूर्णम् अथवा कलाभिस्सहितं प्राहुरित्युत्तरम् उभयत्र जना इति शेषः-ग
5 कुमुदानां स्थानैर्वर्तनैः-ग
6 उत्कर्षा-ग
7 पौर्णिमाया तिथेः-ग। पौर्णमातिथे-'ल'
8 रसेगुणे दृक्ज्ञानं-ग
9 चिकुरिमाणं-ग
* अ को II-4-156



CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

शकुन्ताः। अतो रसज्ञस्य धीमतः चकोरोपमा स्वीकृता। *दृग् ज्ञाने ज्ञातरि त्रिषु इत्यमरः। काला आभा येषां ते [1]कालाभा गळाः येषान्ते कालाभगळाः। एवंभूताः खगाः के इति प्रश्नः। केकायाः केकाध्वनेः लाभः प्राप्तिः येषु ते केकालाभाः गळाः येषां ते केकालाभगळाः मयूराः इत्युत्तरम्। [2]पर्यायोक्तिरलंकारः।

'पर्यायेणार्थसाधनमिति' लक्षणात्। **'केकावाणीमयूरस्य' इत्यमरः[3]

सूक्ष्मापिकोक्तिः श्राव्या स्यात्किं शुकाद्यैर्वृतं वनम्।
का मोहिता स्यात्सुलभा कंदर्पं भजते युवा ॥ १३ ॥

सूक्ष्मेति सूक्ष्मापि स्वल्पापि का उक्तिः फणितिः श्राव्या स्यादिति प्रश्नः। सूक्ष्मा कनीयसी पिकोक्तिः कोकिलोक्तिः श्राव्या स्यादित्युत्तरम्। उभयत्र जनः इति शेषः। शुकाद्यैः [4]कीरप्रभृतिभिः पक्षिभिः वृत्तम् आवृत्तं वनं किमिति प्रश्नः। किंशुकाद्यैः पलाशप्रभृतिभिः वृक्षैर्वृत्तंवनमित्युत्तरम् मोहिता सुलभा का स्यादिति प्रश्नः। कामेन स्मरेण ऊहिता तर्किता कामोहिता सुलभा स्यादित्युत्तरम्। युवा यौवनशाली पुमान कं काम इव दर्पं भजते इति प्रश्नः युवा कदर्पं मन्मथं मन्मथविकाररूपं दर्पं भजत इत्युत्तरम्।

कन्यायमिच्छेत्कान्तेप्सुः स्वप्तुमर्हा समश्चका।
कान्तां को रक्षितुं शक्तः कोमलांगोज्वलश्शिशुः ॥ १४ ॥

कमिति कान्ताम ईप्सुः कान्तेप्सुः कान्ताम् आप्तुमिच्छुः पुमान् कं कमेव न्यायमिच्छेदिति प्रश्नः। कान्तेप्सुः कन्यायाः वध्वाः अयं शुभावहविधिं विवाहं इच्छेदित्युत्तरम्। ***'अयश्शुभावहोविधिः' इत्यमरः। अपिच। समं साकंस्वप्तुं शेतुं अर्हाःके इति प्रश्नः।

1 कालाभासि कालाभगळा येषान्ते कालाभगळाः। ग

2 पर्यायोक्तिरलंकार इत्यारभ्य केकावाणी इति पर्यन्तो भागः 'ग' प्रतौ न दृश्यते।

3 इत्यमरः इत्यनन्तरं † "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः इति पर्यन्तः भागः ल प्रतौ न दृश्यते।

4 प्रभृतिभिः वृत्तम् आवृत्तं वनमित्युत्तरम्- ग

* अ को III-3-372

** अ को II-5-252

† अ को I-4-151

*** अ को I-3-121

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मश्वेन सह वर्तते इति समश्वका तल्पान्विता समं स्वप्तु-मर्हन्ती-त्युत्तरं प्रश्नगतं [1]सममिति पदं उत्तरेऽप्यनुवर्तते। कः कान्तां रक्षितुं परपुरुषमसंभाषयितुं शक्तः इति प्रश्नः। कान्तां [2]रक्षितुं कान्तस्य पत्युः अङ्कः उत्सङ्गः कान्ताङ्क इत्युत्तरम् प्रश्नगतं कान्तामिति कर्मपदं उत्तरेऽप्यनुवर्तते। *'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः मलांङ्गोज्वलः मलिनदेहोपि प्रकाशमानः एवं भूतः शिशुः क इति प्रश्नः। कोमलाङ्गोज्वलः कोमलैः सुकुमारैः अङ्गैः अवयवैः उज्वलः शिशुरित्युत्तरम्।

वेश्याबुद्धिः काकुलीना कांचनाशोद्यतां त्यजेत्।
दंपती कौ तु कोपात्तौ कौमारार्हौ वधूवरौ ॥ १५॥

वेश्येति—वेश्याबुद्धिः कुलीना कुलश्रेष्ठा रसिकवशीकरणकुशला केति प्रश्नः। काकुलीना काक्वाम् अर्थान्तरचटुलोक्त्यां लीना [3]तत्परा वेश्याबुद्धिरित्युत्तरम्। अपि च नाशोद्यतां [4]नष्टविधाम् उद्यतां कां त्यजेदिति प्रश्नः। काञ्चनाशोद्यतां काञ्चनस्य स्वर्णस्य आशायाम् उद्यतां त्यजेदित्युत्तरम्। उभयत्रापि वेश्यामित्यनुवर्तते। धीमानिति शेषः। कोपात्तौ क्रोधान्वितौ दम्पती स्त्रीपुमांसौ कौ इति प्रश्नः। कौतुकोपात्तौ कुतूहलान्वितौ दम्पती इत्युत्तरम्। मारार्हौमन्मथविलास-योग्यौ वधूवरौ कौ इति प्रश्नः। कौमारेण यौवनोपान्त्यवयसा अर्हौ वधूवरावित्युत्तरम्।

लिपिश्चकास्ति वैधात्री निर्विचारस्सदेव कः।
गीतिः का रागतानार्हा वार्याका पुरुषस्थितिः ॥ १६॥

लिपिरिति—धात्री पोषणकर्त्री लिपिश्च लिपिस्तु का वै कानामास्तीति प्रश्नः। वैधात्री विधातृसंबन्धिनी लिपिः चकास्ति प्रकाशत इत्युत्तारम्। संरक्षण-कर्मणि सर्वलिपिभ्यः ब्रह्मलिपिरेव गरियसीति भावः। सदेव सर्वकालेऽपि निर्विचारः निर्व्यसनः कं इति प्रश्नः। सदेवकः देवेन भागधेयेन अथवा देवतानुग्रहेण सहितः सदेवत निर्विचार इत्युत्तारम्। रागतानार्हा रागस्य

---

1 समन्चपदं उत्तरत्रानुवर्तते-ग

2 रक्षितुं कान्तां कः कान्तायस्य पत्युः उत्सङ्गे सः कान्तां कः सः शक्त इत्युत्तरम्-ग

3 तत्त्व वा वैश्याबुद्धिरित्युत्तरम्-क

4 नष्टविधो उद्यतामुद्युक्तां-ग

* अ को III-3-159

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

तानानि कल्पनाविशेषाः तेभ्योऽर्हगीतिः [1]रागक्रिया केति प्रश्नः । कारागता निर्बन्धस्थलं प्राप्ता गीतिः नार्हेत्युत्तरम । स्वच्छन्दतया गीयमाना गीतिः एव कल्पनाविशेषैर्विजृम्भत इति भावः । वार्या वारयितुं योग्या पुरुषस्थितिः पुरुषाणां रीतिः केति प्रश्नः । कापुरुषस्थितिः कुत्सितपुरुष[2]रीतिः वार्येत्युत्तरम् ।

कालसत्ताफलवती समुत्काप्रीयते सभा ।
समानाकस्यनित्यं श्रीः जनुर्लब्ध्वाशुकोऽत्तरत ॥ १७ ॥

कालसत्तेति फलवती [3]इष्टार्थसाधनी । लसत्ता लसतोभावः लसत्ता । स्फूर्तिमत्ता केति प्रश्नः । कालस्य सत्ता कालसत्ता कालसमीचीनता फलवतीत्युत्तरम् । अनुकूले काले सकलसाधनानि स्वत एव फलं प्रविशन्ति नान्यथेति भावः । का सभा मुदा सहिता समुत् प्रीतियुक्ता सती प्रीयते इति प्रश्नः । समुत्का सम्यक् उत्का । अधिकउत्कण्ठान्विता सभा प्रीयते इत्युत्तरम् । *'उत्क उन्मनाः' इत्यमर. ।

कस्य श्रीः सम्पत् नित्यं निरंतरं समाना एकरूपा इति प्रश्नः । नाकस्य स्वर्गस्य श्रीः सम्पत् नित्यं समेत्युत्तरम् । जनुः जन्म लब्ध्वा आशु क्षिप्रं सतः पुमान् अतरत तरति स्मेति प्रश्नः । शुकः शुकमहर्षिः जनुर्लब्ध्वा अतरदित्युत्तरम् । गर्भतः पतनादुत्तरक्षण एव तपोनिष्ठया आत्मसाक्षात्कारं प्राप्तवान् इति भावः ।

पुनरावृत्तिविरहितं पदमक्षरलक्षदैर्नृपैर्भेजे ।
अथ च कविहृदयकुशलस्तावान् पुरुषोत्तमोऽस्ति कीर्त्यै ॥ १८ ॥

पुनरिति—अक्षरलक्षदैः [4]प्रत्यक्षरं लक्षसंख्यापरिमितिधनप्रदैः नृपैः

---

1 गानक्रिया-ल

2 रीतिस्थिति वार्या-ग

3 इष्टार्थसाधनी इत्यारभ्य लसतोभाव इति पर्यन्तो भागः 'ग' प्रतौ न दृश्यते ।

4 प्रत्यक्षरम् इत्यारभ्य पुरुषोत्तमः इति पर्यन्तं 'ग' प्रतौ अधोनिर्दिष्टरीत्या कृतिभागः दृश्यते ।

प्रत्यक्षरंलक्षसंख्या द्रव्यदैः नृपैः भोजादिभिः पुनरावृत्तिरहितं शाश्वतं पदं वैकुण्ठं भेजे लब्धम् । अपि च अनुरं कविहृदयकुशलः कवेः श्रीनिवासः कवेः हृदयकुशल· हृदयं मनः 'स्वान्तंहृन्मानसं मनः' इत्यमरः मनस्थिताभिप्रायं वेत्ति अर्थं स तावान् भवति पुरुषोत्तमोऽस्ति । —ग

* अ को III-1-8

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

भोजादिभिः पुनरावृत्तिविरहितं पदं कैवल्यं भेजे प्राप्तामित्यर्थः। भज सेवायां कर्मणि लिड्। अथ च अनन्तमपि कविहृदयकुशलः कविमानसत्वतज्ञवान् उक्तरीत्या प्रत्यक्षरलक्षवितरणविचक्षणः पुरुषोत्तमः नरश्रेष्ठः कीर्त्यै कीर्तिं संपादयितुं कः अस्तीति।

प्रश्नः अस्योत्तरं कीर्तयितुं योग्याः कीर्त्याः ब्रह्मरुद्रेन्द्रादयः तेषु एक. मुख्यः एव भूतः पुरुषोत्तमः [1]श्रीमान् विष्णुः अस्तीत्युत्तरम् '**एके मुख्यान्यकेवलाः इत्यमरः। स च विष्णुः कथंभूतः कविहृदये कुशलं क्षेमं यस्य सः कवीनां हृत्पद्ममेव अधितिष्ठतीत्यर्थः तावान्न इत्यनेन अक्षरलक्षट इत्यनुवर्तते। अक्षरं अनश्वरं यल्लक्ष्यं निजपदं तदपि ददान इत्यर्थः। अमुं हृदिस्थं ज्ञानचक्षुषा सत्कवय एव सुकृतिविशेषात् विज्ञाय प्रस्तुवन्तः कृतार्थाः स्युरिति भावः।

स्वयमीश्वरोऽस्ति नाम्ना सुतः कुमारः कुटुम्बिनी त्वार्या।
धाम तु धामैव परं स पुमान् ज्ञेय. कथं विनानुभवम ॥ १९ ॥

[2]स्वयमिति–यः स्वयं नाम्ना ईश्वरः प्रभुरिति संज्ञिकः अस्ति। यस्य सुतः नाम्ना कुमारः सुतः इत्येव संज्ञिकः अस्ति। यस्य कुटुम्बिनी तु

1 श्रीमान् विष्णुः इत्यारभ्य कृतार्थास्युरिति भावः इत्यन्तो भागः ग प्रतौ न दृश्यते।

2 स्वयमिश्वरोऽस्ति इति पद्यानन्तरं प्रकरणसमाप्तिपर्यन्तो भागः ग प्रतौ विभिन्नरूपेण असदृशतया च दृश्यते।

तद्यथा —

स्वयमीश्वरोऽस्ति नाम्ना सुतः कुमारः कुटुम्बिनीत्वार्या।
धाम तु धामैव परं स पुमान् ज्ञेयः कथंविनानुभवम् ॥

नाम्ना स्वयं ईश्वर केषां वा कुटुम्बिनीतु आर्या पूज्या इति धाम तु परंधामेव तेज एव। सुतः पुत्रः कुमारः कस्य वा स अनुभवं विना कथं ज्ञेयः। भवमनुभवं परमेश्वरं विना कथम् अन्येन ज्ञेयः ज्ञातुं शक्यः स्वानुभूत्या परमेश्वर एव जानाति न त्वपर इतरेषां तादृशानुभवो नास्तीत्यर्थः।

†मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

तथा च भगवद्गीतायां-न ही कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति इति सहस्रषु पुमान् कश्चित् कश्चित् कश्चित् वेत्ति योगयुतो नरः न सर्वे योगनिरताः जना विन्दन्ति मां परम्।

श्रीनिवास कवि सार्वभौमवावसर्वभूमिविधता जयत्यसौ।
यत्समं फणितुमुत्तरावळिं नामराश्चपटवः क पामराः ॥

* अ को I-4-155

** अ. को. III 3-171

† भ. गी. VII-3

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

नाम्ना आर्या श्रेष्ठा इति संज्ञिका अस्ति। यस्य धाम तु गृहमपि नाम्ना धामैव धामसञ्ज्ञिकमेव परं केवलम् अस्ति सर्वत्र यच्छब्दश्शेषः नाम्नेत्यनुवर्तते।

सः उक्तप्रकारः पुमान् अनुभवं विना यत्किंचिदनुषंगं प्रतीतिं विना कथं ज्ञेय इति प्रश्नः। स पुमान् भवं विना शिवमन्तरा कथं नु ज्ञेय इति प्रश्नः वाक्यादेव लभ्यते। भवशब्दवाच्यश्शिव एव स पुमान् ज्ञेय इति फलितोऽर्थः। उभयत्र जनैरितिशेषः *"व्योमकेशो भवो भीमः" इत्यमरः शिवपरत्वेन पादत्रयार्थस्स्पष्ट एव। ईश्वरश्शर्व ईशान इति। कुमारः क्रौंचधारण इति। 'आर्या दाक्षायिणी' चेति 'धामान्यथ चतुष्पथे' इति च अमरः एवं षट् षष्टि वाक्यानि संदर्भा [नु] गुणं निरूप्य ग्रन्थान्ते स्वप्रतिष्ठा विधानं प्रकाशयन् रचितायाः कृते अन्यादृशत्वं अत्युक्तिमाश्रित्य निर्दिशति।

श्रीनिवासकविसार्वभौमवाक्सर्वभूमिवि[1]दिता जयत्यसौ
यत्समं फणितुमुत्तरावळिं नामराश्चपटवः क्व पामराः॥ २०॥

श्रीनिवासेति—असौ प्रश्नाभिन्नोत्तरात्मिका श्रीनिवासकविसार्वभौमवाक्। सर्वभूमिविदिता सकलदेशप्रथिता जयति। वाचः सर्वभूमिविदितेति विशेषणकथनेन सर्वभूमौ विदितस्सार्वभौम इति प्रकृते प्रयुक्तस्य सार्वभौमपदस्य विग्रहः प्रदर्शितः। तस्येश्वरः तत्र विदितः इति उभयार्थकोऽयं तद्धितो बोध्यः। अमराश्च देवाश्च अपि उत्तरावळिं उत्तरपरंपरां यत्समं येन सदृशं यथा तथा फणितुं न पटवः न समर्थाः। एवं सति पामराः क्व प्राकृत जनाः तस्यां धुरीत्यर्थः। काव्यार्थापत्तिरलंकारः। [2]"कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इति लक्षणात्।

इति प्रश्नाभिन्नोत्तरावळिंव्याख्या सम्पूर्णा।

---

1 विजिता ल
2 च· लो· 117
* अ. को. I 1-38

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## प्रश्नान्तराभिन्नोत्तरावळिः
### तृतीयः क्रमः

वेङ्कटविभुं भजेऽहं सततं मां त्रायतां स कीदृशश्चेत् ।
तद्विबुधैरवधार्यं सरस्वतीत्युत्तरस्य यः प्रश्नः ॥ १ ॥

कारुण्यभृत ।

अहं वेङ्कटविभुं वेङ्कटेश्वरं वन्दे । सः माम् अनवरतं रक्षतु । सः कीदृशः अस्ति इति प्रश्नः । एवमेव सरस्वती इति उत्तरस्य च यः प्रश्नः अस्ति स प्रश्नः कः इति पृष्टेसति अनयोः द्वयोः प्रश्नयोः एकमेवोत्तरम् कारुण्यभृत इति । वेङ्कटविभुः सर्वदा कारुण्यभृत् करुणाभरः इति भावः । एवमेव सरस्वती नाम ज्ञानं कारुण्यभृत । सा सरस्वती आरुण्यभृत् अरुणस्य भावः आरुण्यं रक्तता इति भावः आरुण्यं बिभर्ति इति आरुण्यभृत् अत्र रक्त इति शब्दस्य अनुरक्ता इत्यर्थः । अत्र आरुण्यभृत् इत्यस्य अनुरागविशिष्टा अथवा अनुग्रहविशिष्टा इति विवक्षितोऽर्थः । सा का इति प्रश्नः सरस्वती इत्युत्तरम् ।

तनयौ गिरितनयायाः कटिसूत्रमुपेत्य कीदृशौ स्फुरतः
तद्विबुधैरवधार्यं स्तनाविति ह्युत्तरस्य यः प्रश्नः ॥ २ ॥

कौपीनसुन्दरौ ।

पार्वत्याः सुतौ कटिसूत्रं बद्ध्वा कथं स्फुरतः इति प्रश्नः । तस्य उत्तरं कौपीनसुन्दरौ इति । कौपीनधारणेनापि तस्याः तनयौ स्कन्दगणेशौ सुन्दरौ स्फुरतः इति कौपीनसुन्दरौ इत्युत्तरं भवति । तदेव उत्तरं स्तनौ इति उत्तरस्य प्रश्नरूपं भवति कौ पीनसुन्दरौ इति प्रश्नः प्रश्नकरणवेलायां सभङ्गश्लेषः । उत्तरकथनवेलायां अभङ्गश्लेषः इति विवेकः । कौ पीनौ च सुन्दरौ च भवतः इति प्रश्नस्य स्तनाविति उत्तरम् । एवं कौपीनसुन्दरौ इत्येकमेव पदं प्रथमतः उत्तरं भवति ततः प्रश्नश्च भवति ।

रणरङ्गव्यासङ्गश्शूरेभ्यो मनसि रोचते कीदृक् ।
तद्विबुधैरवधार्यं चिकुरा इत्युत्तरस्य यः प्रश्नः ॥ ३ ॥

केळिसदृश

रणाङ्गणे युद्धनिरतेभ्यः वीरेभ्यः मनः कीदृक् रोचते इति प्रश्नः । तस्य उत्तरं केलिसदृशः इति । अत्यन्तं भयान्वितं युद्धमपि शूरा योधाः

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

केलिवदाचरन्ति निरायासेन युद्धनिरता भवन्ति। भयस्य छायापि नास्ति इति भावः। तदेव चिकुरा इति उत्तरस्य प्रश्नरूपं भवति। के अलिसदृशः इति प्रश्नः। प्रश्नकरणवेलायां सभङ्गश्लेषः। उत्तरकथनवेलायां अभङ्गश्लेषः इति। के अलिसदृशः इति प्रश्नस्य चिकुराः इति उत्तरम्। एवं केलिसदृशः इत्येकमेव पदं प्रथमे उत्तरं भवति तदेव प्रश्नोऽपि भवति।

कामिन्याः कुचकुम्भः भामिन्याः कीदृशश्च निटिलेन्दुः।
तद्विबुधैरवधार्यं शुभविधिरित्युत्तरस्य यः प्रश्नः ॥ ४ ॥

कस्तूर्याढ्यः ॥

अत्र द्वौ प्रश्नौ भवतः। कामिन्याः कुम्भसदृशस्तनौ कीदृशौ स्फुरतः। तथा विलासवत्याः मुखेन्दुः कीदृक् स्फुरति इति द्वौ प्रश्नौ। सुगन्धयुक्त कस्तूरिकामोदेन कामिन्याः स्तनौ शोभेते। भामिन्याः मुखेन्दुरपि कस्तूरीतिलकेन शोभते इति उत्तरम्। तदेव उत्तरम शुभविधिः इति उत्तरस्य प्रश्नरूपं भवति। कः तूर्याढ्यः इति प्रश्नः कः तूर्येण आढ्यः मङ्गलवाद्येन श्रेष्ठतमः इति प्रश्नस्य शुभविधिः विधिपूर्वकी मङ्गलकार्यम् इति उत्तरम। एवं कस्तूर्याढ्यः इति एकमेवपदं उत्तरं प्रश्नश्च भवति।

कृपणमतिः कृषिकधृतिः कृपाणलतिका च कीर्त्यते कीदृक्
तद्विबुधैरवधार्यं पूर्वदिगित्युत्तरस्य यः प्रश्नः ॥ ५ ॥

[1]कोषस्फूर्तिः ॥

अत्र त्रयः प्रश्नाः सन्ति। कृपणबुद्धिः कृषिकस्य धैर्यं लता सदृशः खड्गः एते त्रयः कथं कीर्त्यन्ते। भिन्नार्थयुक्तानां त्रयाणां प्रश्ननानां एकेनैव पदेनोत्तरं भवति। कृपणबुद्धिमान् नरः सदा धनसंपादनं कृत्वा तस्य कोषं पूरयितुमेव इच्छति इति कीर्त्यते। कृषिकोऽपि धान्येन तस्य कोषं (धान्यशेखरणस्थानम्) पूरयितुमेव वाञ्छति। लतासदृशखड्गोपि कोषे स्थित्वा युद्धसमये उपयोक्तुं अर्हः इति भिन्नप्रश्नानां एकमेव उत्तरम।

तदेव उत्तरं पूर्वदिक् इति उत्तस्य प्रश्नरूपं भवति। का उषस्फूर्तीः इति प्रश्नः। प्रश्नकरणवेलायां सभङ्गश्लेषः उत्तरकथने अभङ्गश्लेषः का उषस्स्फूर्तीः इति प्रश्नस्य पूर्वदिक् इति उत्तरम्। एवं कोषस्फूर्ती इत्येकमेव पदम् उत्तरं प्रश्नश्च भवति।

1 कोपस्फूर्ता—क

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

अनतिचिरमनति कृच्छ्रात्फलप्रदा भवति कीदृशी भूमिः ।
तद्विबुधैरवधार्यं यः प्रश्नोऽर्हति [1]मरुत्प्रवर सुहृदाम ।

कोद्रवभाक् । ६ ।

अत्यल्पकाले अनायासेन फलदायिनी भूमिः कीदृशी स्यात इति प्रश्नः । तस्य कोद्रवभाक् इति उत्तरम । कोद्रवः कश्चन धान्यविशेषः । स तु अत्यल्पकाले फलति । तदुत्पादनार्थं अतिप्रयत्नोऽपि नावश्यकः । अतः तादृश-धान्यं भजते या भूमिः सा कोद्रवभाक् । तादृशी भूमिः फलप्रदा इत्यर्थः ।

को द्रवभाक् इति प्रश्नः । द्रुगतौ इत्यस्मात धातो द्रवति इति द्रवः—गमनमित्यर्थः । द्रवं भजते इति द्रवभाक् गमनशाली इत्यभिप्रायः । गमनशीलः कः इति प्रश्नः । तस्य मरुत्प्रवर इत्युत्तरम् श्रेष्ठः वायुः सर्वदा गतिशीलः इति । एवं मरुत्प्रवर इत्यस्य को द्रवभाक् इति सभङ्गेन प्रश्नः । भूमिः इत्यस्य उत्तरसमये कोद्रवभाक् इत्यभङ्गश्लेषः । एवं कोद्रवभागिति पदम् उत्तरप्रश्नरूपमस्ति ।

पृष्ठं कया धरण्याः नितम्बो विभाति च रमण्याः ।
तद्विबुधैरवधार्यं यः प्रश्नः सुरतेश्च सुगतेस्स्यात ॥ ७ ॥

काञ्च्या ।

धरण्याः नितम्बः भूमध्यभागः कया विभाति इति प्रश्नः । एवमेव रमण्याः नार्याः नितम्बभागः कया शोभते इति प्रश्नः । उभयोः प्रश्नयोः काञ्च्या इति उत्तरम् । धरण्याः मध्यभागस्य इयं काञ्ची नगरी अतीव शोभाधायिनी इति । काञ्चीपट्टणसंबन्धात भूमेः श्रेष्ठता इति । एवं रमण्याः नितम्बप्रदेशः काञ्च्या कट्याभरणेन शोभते इत्यर्थः का अञ्चा इति प्रश्नः । अञ्चति इति अञ्ची गमनं इत्यर्थः । तदा का गतिः इतिः प्रश्नः । उत्तरन्तु सुगतिः शोभनगमनमेव गतिः इति भावः । एवं का अञ्ची इति प्रश्नस्य संतोषशालिनी का इति प्रश्नः । तस्य सुरतिः इत्युत्तरम् । एवं काञ्ची इति पदम उत्तररूपं प्रश्नरूपं चेति भाव्यम् ।

अभिलषते मूढजनः कया परधनं कया परवधूं च
तद्विबुधैरवधार्यं कविवाणीत्युत्तरस्य यः प्रश्नः ॥ ८ ॥ कामधुरा ।

परधनं परवधूं च कया अभिलषते । कः मन्दमतिः परवधूं परधनं च इच्छति इति द्वौ प्रश्नौ । तयोः उत्तरं कामधुरा इति । कामान्धः

1. मरुत्प्रदर – क

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

मन्दमतिः विवेचनराहित्येन केवल कामतृप्तिरेव सर्वस्वमिति मत्वा तस्याः सिद्धये परयोषितं परधनं च कामभावेन अभिलषति इति भावः। तदेव उत्तरं कविवाणीति उत्तरस्य प्रश्नरूपं भवति। का मधुरा इति प्रश्नः। तस्य कविवाणी इति उत्तरम्। एवं कामधुरा इत्येकमेव पदं प्रथमं उत्तरम् अनन्तरं प्रश्नश्च भवति।

[1]गोवर्धनगिरेश्चक्रदण्डतामुपयाति कः।
गृध्रा इत्युत्तरं यस्य प्रश्नस्य सचिवोत्तरम्॥ ९॥ केशवभुजः।

गोवर्धनगिरिं यः चक्रदण्डमिव कृत इति प्रश्नः। महत्तरं गोवर्धनं गिरिं स लीलया स्वहस्ते सदा स्थितं चक्रदण्डमिव येन आचरितं तत् केशव भुज कृष्णस्यभुजः इति उत्तरम्। तदेव उत्तरं गृध्रा इति उत्तरस्य प्रश्नरूपं भवति। के शवभुज (के शवभुक्) इति प्रश्नः। के शव भुजः इति प्रश्नस्य गृध्रा इति उत्तरं भवति। गृध्राः शवभक्षकाः इति प्रसिद्धम्। "केशव-भुज" इत्येकमेव पदम् उत्तरं प्रश्नश्च भवति।

आदौ कारुण्यभृद्वाच्यं ततः कौपीनसुन्दरौ
ततस्तु केळिसदृशः कस्तूर्याढ्यः ततः परम्॥ १०॥

कोषस्फूर्ती कोद्रवभाक् काञ्च्या कामधुरा ततः।
यन्मृग्यम् तन्निगदितं शेषं व्यक्तं हि धीमताम्॥ ११॥

कुशलधियां कुतुकार्थं संक्षिप्तं या श्रीनिवाससंग्रथिता।
चिरमुत्तरावळिरियं जयतु प्रश्नान्तराभिन्ना॥ १२॥

इति श्रीनिवासविरचिते प्रश्नोत्तरसुभाषिते प्रश्नान्तराभिन्नोत्तरावळिः तृतीयः क्रमः।

अत्र प्रश्नान्तरभिन्नोत्तरावल्याः परिसमाप्तौ कविः पुनः दशमएकादश-श्लोकाभ्यां (श्लोकद्वयेन) उत्तराणि संक्षेपेण पुन भणित्वा ततः कुशलमतीनां कुतूहलार्थम् (आश्चर्यकरणार्थं) संक्षेपेण कृता। एषा प्रश्नान्तराभिन्ना उत्तरवलिः सदा जयतु इति शुभाशंसनं व्याहरति।

---

1 गोवर्धनगिरेः इति श्लोकः क प्रतौ न दृश्यते। इतः आरभ्य तृतीयक्रमः इति पर्यन्तो भागः 'ल' प्रतौ न दृश्यते।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

# प्रश्नविलोमोत्तरावळिः

## चतुर्थः क्रमः

भाविकहिताक्षमाकानुता मणिवास्ति का धिया सेव्या ।
का वैशिष्टा देवे मारनुताख्यास्ति का च स्त्री ॥ १ ॥

का देवतास्ति गेया भाति प्रतिभाहि का शिवे निरता ।
का नेया भाति नुरिह भाव्या का साहिती स्वभावनया ॥ २ ॥

भाति ननु का विभास्वा कालिनाया प्रिया हि तिष्ठति सः ।
छाया हिताश्रिया का साध्यादिष्टयस्तु नैज भूम्या का ॥ ३ ॥

भार्या कातिमतविभातिरस्फुरति कातु कुसुमाभा ।
साहसरसत्तमा का नाधीना काति दूराग जारा ॥ ४ ॥

कालं रावणरचना ज्ञाता भुवि सरसताहि वर्या का ।
स्त्री कालोभ्या ना जनिका श्रीर्मनसस्तु जातिनीतिज्ञा ॥ ५ ॥

राकासाररसाका विदिता दिवि चारु का रता नाना ।
का हि मिताद्रिमुख चयास्तुत्या कांत्यास्तु कापि वा सरसा ॥ ६ ॥

का निवसति भाव्याक्ष्मामाराहं काळिपानसूय्या वा ।
सेवासुरानुधेया पिकातिभा का च मेया द्यौः ॥ ७ ॥

का नाम सभासजया साररसा का विभेदनं गातुम् ।
का ताप विदित भाव्या कालं कवितानुभासतां स विभुः ॥ ८ ॥

द्वात्रिंशद्वाक्यमिता ग्रन्थोऽयं श्रीनिवाससत्कविना ।
प्रीत्यै हरेर्विजयतां प्रश्नविलोमोत्तरावळिरपूर्वा ॥ ९ ॥

श्रीनिवासकविसार्वभौमवान् सर्वभूमिविदिता जयत्यसौ ।
यत्समं फणितुमुत्तरावळिं नामराश्च पटवः क्व पामराः ॥ १० ॥

इति श्रीनिवासविरचिते प्रश्नोत्तरसुभाषिते प्रश्नविलोमोत्तरावलिः चतुर्थ क्रमः ।

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

ग्रन्थस्थ पद्यानाम् अकरादिसूची पुटसंख्या



CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

## ग्रन्थमध्ये उदधृतानां अन्येषां श्लोकानाम् अकरादिसूची



wo 5398—MUPM—1000 copies—6-1-99

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

# ಪ್ರಶ್ನೋತ್ತರಸುಭಾಷಿತಮ್

## ಮೊದಲನೆಯ ಕ್ರಮ

೧. ತ್ರಿಲೋಕಾಮೋದಕಃ ಕಶ್ಚಿತ್ಕರೇ ಕಲಿತಮೋದಕಃ ।
ಸ್ರವದ್ದಾನೋದಕೋ ದೇವಃ ಪಾತು ವಿಘ್ನಾಪನೋದಕಃ ॥

ಮೂರುಲೋಕಗಳಿಗೂ ಸಂತಸವನ್ನು ನೀಡಲು ಸಮರ್ಥನಾದ ಮೋದಕಧಾರಿಯೂ ಮದೋದಕಧಾರಿಯೂ (ಕಪೋಲದಲ್ಲಿ ಸುರಿಯುತ್ತಿರುವ ಮದವುಳ್ಳ) ವಿಘ್ನವಿನಾಶ ಕಾರಿಯೂ ಆದ ಗಜಮುಖನು ಸುಜ್ಞಾನವನ್ನು ಕೊಟ್ಟು ಕಾಪಾಡಲಿ ಎಂಬುದಾಗಿ ಗ್ರಂಥದ ಆದಿಯಲ್ಲಿ ವಿಘ್ನಪರಿಹಾರಕ್ಕೋಸುಗ ಕವಿ ವಿಘ್ನನಿವಾರಕನಾದ ಗಜಮುಖ-ನನ್ನು ಸ್ತುತಿಸಿ ನಮಸ್ಕಾರರೂಪ ಮಂಗಳವನ್ನು ಮಾಡಿದ್ದಾನೆ.

೨. ಸ್ವೀಕರ್ತವ್ಯಮಿದಂ ಸುಜ್ಞೈಃ ಪ್ರಶ್ನೋತ್ತರಸುಭಾಷಿತಮ್ ।
ಕ್ರಮೈಶ್ಚತುರ್ಭಿಸ್ಸರಸಂ ಶ್ರೀನಿವಾಸೋ ನಿಯೋಕ್ಷ್ಯತಿ ॥

ನಾಲ್ಕು ಕ್ರಮಗಳಿಂದ (ಅಧ್ಯಾಯಗಳಿಂದ) ಕೂಡಿ ಅತ್ಯಂತ ಚಮತ್ಕಾರಯುತವೂ ಆಗಿ ಬುದ್ಧಿವಂತರಿಗೆ ಆನಂದದಾಯಕವಾಗಿರುವ ಶ್ರೀನಿವಾಸಕವಿಯಿಂದ ರಚಿತವಾದ "ಪ್ರಶ್ನೋತ್ತರಸುಭಾಷಿತಮ್" ಎಂಬ ಈ ಗ್ರಂಥವನ್ನು ವಿದ್ವಾಂಸರು ಸಹೃದಯತೆ-ಯಿಂದ ಸ್ವೀಕರಿಸಲಿ ಎಂದು ಕವಿ ಸಹೃದಯ ವಿದ್ವಾಂಸರಲ್ಲಿ ವಿನಂತಿಸಿಕೊಳ್ಳುವುದರ ಮೂಲಕ ತನ್ನ ಸರಳ ಸ್ವಭಾವವನ್ನು ತೋರಿಸಿಕೊಂಡಿದ್ದಾನೆ.

೩. ದ್ವಿತ್ರ್ಯಾದ್ಯೈರುತ್ತರೈರಾದೌ ಪ್ರಶ್ನಾಭಿನ್ನೈಸ್ತತಃ ಪರಮ್ ।
ತತಃ ಪ್ರಶ್ನಾಂತರಾಭಿನ್ನೈಃ ವಿಲೋಮೈಶ್ಚಾತ್ರ ಭೂಯತೇ ॥

ಕವಿ ತನ್ನ ಗ್ರಂಥರಚನೆಯಲ್ಲಿನ ಪ್ರತಿಯೊಂದು ಕ್ರಮದಲ್ಲಿಯೂ ಅನುಸರಿಸಿರುವ ರೀತಿಯನ್ನು ಹೇಳುತ್ತಾನೆ. ಮೊದಲನೆಯ ಕ್ರಮದಲ್ಲಿ ಎರಡು ವಸ್ತುಗಳಿಗೆ ಸಂಬಂಧಿಸಿ ದಂತೆ ಎರಡು ಅಥವಾ ಮೂರು ಪ್ರಶ್ನೆಗಳನ್ನು ಕೊಟ್ಟು ಕ್ರಮವಾಗಿ ಉತ್ತರವನ್ನು ಕೊಟ್ಟಿರುತ್ತಾನೆ. ಉತ್ತರಗಳು ಭಿನ್ನ ಭಿನ್ನ ಪ್ರಶ್ನೆಗಳಿಗೆ ತಕ್ಕಂತೆ ಭಿನ್ನ ಭಿನ್ನ-ವಾಗಿರುತ್ತವೆ.

ಎರಡನೆಯ ಕ್ರಮದಲ್ಲಿ ಒಂದೇ ಪದದಲ್ಲಿ ಪ್ರಶ್ನೆ ಹಾಗೂ ಉತ್ತರಗಳು ದೊರಕುವಂತೆ ರಚಿಸಿದ್ದಾನೆ. ಮೂರನೆಯ ಕ್ರಮದಲ್ಲಿ ಮೊದಲಿನ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರವು ಯಾವ ಪದವಾಗುತ್ತದೆಯೋ ಎರಡನೆಯ ಬಾರಿಗೆ ಅದೇ ಪದವು ಉತ್ತರಕ್ಕೆ ಪ್ರಶ್ನೆ ಯಾಗುತ್ತದೆ. ಎಂದರೆ ಒಂದೇ ಪದವು ಉತ್ತರ ಹಾಗೂ ಪ್ರಶ್ನರೂಪವಾಗಿರುತ್ತದೆ. ಹೀಗೆ ಕವಿ ಮೂರನೆಯ ಮಾರ್ಗದಲ್ಲಿ ನೂತನ ಮಾರ್ಗವನ್ನು ಅನುಸರಿಸಿದ್ದಾನೆ.



CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

ಕಡೆಯದಾದ ನಾಲ್ಕನೆಯ ಕ್ರಮದಲ್ಲಿ ಅನುಲೋಮ ವಿಲೋಮ ಕ್ರಮದಿಂದ ಪ್ರಶ್ನೋತ್ತರ ನಿರೂಪಣೆಯನ್ನು ಮಾಡುತ್ತಾನೆ.

೪. ಶ್ರೀರಂಗಪುರವಾಸೇನ ಶ್ರೀನಿವಾಸಮಹಾಕವೇಃ ।
ಪಂಚಾಶತ್ಪ್ರಶ್ನಕಾವ್ಯಾಖ್ಯಾ ಕ್ರಿಯತೇ ಬುಧತುಷ್ಟಿದಾ ॥

ಶ್ರೀರಂಗಪಟ್ಟಣವಾಸಿಯಾದ ಶ್ರೀನಿವಾಸ ಕವಿಯು ಐವತ್ತು ಪ್ರಶ್ನೆಗಳಿಂದ ಕೂಡಿದ ತನ್ನ ಗ್ರಂಥವನ್ನು ವಿದ್ವಾಂಸರ ಸಂತೋಷಕ್ಕೋಸ್ಕರ ರಚಿಸಿರುವೆನೆಂದು ಹೇಳಿ-ಕೊಂಡಿದ್ದಾನೆ. ಇಲ್ಲಿ ಕವಿಯ ವಾಸಸ್ಥಳ ಅವನ ಹೆಸರು ಹಾಗೂ ಕಾವ್ಯರಚನೆಯ ಉದ್ದೇಶವನ್ನು ತಿಳಿಸಲಾಗಿದೆ.

೫. ಆಗಚ್ಛತೋ ಗಚ್ಛತೋ ದ್ವೇ ಪ್ರಾಪ್ತೇ ದ್ವೇ ನೈವ ಗಚ್ಛತಃ ।
ಗತೌ ದ್ವೌ ನಾಪ್ನುತಃ ಪಶ್ಚಾತ್ ಶ್ರೀನಿವಾಸಕೃತಂ ಮಹತ್ ॥

ಪ್ರತಿಯೊಬ್ಬರ ಜೀವನದಲ್ಲಿ ಬಂದು ನಂತರ ನಿಲ್ಲದೆ ಹೋಗತಕ್ಕಂತಹವು ಎರಡು, ಬಂದನಂತರ ಹೋಗದೇ ನಮ್ಮಲ್ಲೇ ಉಳಿಯತಕ್ಕಂತಹವು ಎರಡು, ನಮ್ಮಿಂದ ದೂರವಾದನಂತರ ಮತ್ತೆ ಮರಳಿ ನಮ್ಮಲ್ಲಿ ಶಾಶ್ವತವಾಗಿ ಬಾರದೇ ಇರುವ ಎರಡು ವಸ್ತುಗಳು ಯಾವುವು ಹೀಗೆ ಇಲ್ಲಿ ಮೂರು ಪ್ರಶ್ನೆಗಳನ್ನು ಕೇಳಲಾಗಿದೆ.

೬. ಆಗಚ್ಛತೋ ಗಚ್ಛತೋ ದ್ವೇ ಸರ್ವೇಷಾಂ ಸಂಪದಾಪದೌ ।
ಕೀರ್ತಿರಪ್ಯಪಕೀರ್ತಿಶ್ಚ ಪ್ರಾಪ್ತೇ ದ್ವೇ ನೈವ ಗಚ್ಛತಃ ॥

ಸಕಲ ಜನರಿಗೂ ಬಂದು ನಿಲ್ಲದೆ ಹೋಗತಕ್ಕವುಗಳೆಂದರೆ ಐಶ್ವರ್ಯ ಹಾಗು ಕಷ್ಟಗಳು (ಆಪತ್ತುಗಳು). ಸುಖವಾಗಲೀ ಕಷ್ಟವಾಗಲೀ ಇಡೀ ಜೀವನಪರ್ಯಂತ ಯಾರಲ್ಲೂ ಶಾಶ್ವತವಾಗಿರುವುದಿಲ್ಲ. ಕಷ್ಟಗಳೇ ಆಗಲಿ ಸುಖವೇ ಆಗಲಿ ನಾಲ್ಕಾರು ವರ್ಷ ಗಳಿದ್ದು ಒಂದುದಿನ ಹೋಗತಕ್ಕಂತಹವುಗಳು. ಆದರೆ ಕೀರ್ತಿ ಹಾಗೂ ಅಪಕೀರ್ತಿಗಳು ಮಾತ್ರ ಒಮ್ಮೆ ಬಂದ ಮೇಲೆ ಶಾಶ್ವತವಾಗಿ ನಿಲ್ಲುತ್ತವೆ. ಒಮ್ಮೆ ಒಳ್ಳೆಯ ಹೆಸರನ್ನು ಗಳಿಸಿಕೊಂಡ ನಂತರ ಆಕಸ್ಮಾತ್ ಅಲ್ಪ ತಪ್ಪು ಮಾಡಿದರೂ ಜನರು ಅದನ್ನು ಲೆಕ್ಕಿಸುವುದಿಲ್ಲ ಪ್ರತಿಯಾಗಿ ಅವನ ಒಳ್ಳೆಯ ಗುಣವನ್ನೇ ನೋಡುತ್ತಾರೆ. ಹಾಗೆಯೇ ಒಮ್ಮೆ ಕೆಟ್ಟವನಾಗಿ ಅಯಶಸ್ಸಿಗೆ ಕಾರಣನಾದರೆ ಅದೇ ಕೊನೆಯವರವಿಗೂ ನಿಲ್ಲುತ್ತದೆ. ಆದುದರಿಂದ ಮನುಷ್ಯ ಶಾಶ್ವತವಾಗಿ ನಿಲ್ಲುವ ಕೀರ್ತಿಯನ್ನು ಗಳಿಸುವತ್ತ ಸಾಗಬೇಕೆಂಬುದೇ ಆಶಯ.

೭. ಯಥಾ ಪ್ರಾಣಃ ತಥಾ ಮಾನಃ ಗತೌ ದ್ವೌ ನಾಪ್ನುತಃ ಪುನಃ ।
ವಸ್ತುದ್ವಯತ್ರಿಕಂ ತ್ರೇಧಾ ಜ್ಞೇಯಮಿತ್ಥಂ ಮನೀಷಿಭಿಃ ॥

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

ಪ್ರಾಣ ಹಾಗೂ ಮರ್ಯಾದೆ ಇವುಗಳನ್ನು ಒಮ್ಮೆ ಕಳೆದುಕೊಂಡರೆ ಮತ್ತೆ ಅವುಗಳನ್ನು ಸಂಪಾದಿಸುವುದಕ್ಕಾಗುವುದಿಲ್ಲ. ಮರಣಹೊಂದಿದರೆ ಅದೇ ಕೊನೆ. ಹಾಗೇ ಮನುಷ್ಯ ತನ್ನ ಗೌರವವನ್ನು ಒಮ್ಮೆ ಕಳೆದುಕೊಂಡರೆ ಮತ್ತೆ ಎಂದಿಗೂ ಹಿಂದಿನಂತೆ ಗೌರವಿಸಲ್ಪಡಲಾರ. ಆದುದರಿಂದ ಇವೆರಡನ್ನೂ ಎಚ್ಚರಿಕೆಯಿಂದ ರಕ್ಷಿಸಿಕೊಳ್ಳಬೇಕು.

ಹೀಗೆ ಎರಡು ವಸ್ತುಗಳಿಗೆ ಸಂಬಂಧಿಸಿದಂತೆ ಮೂರು ಪ್ರಶ್ನೆಗಳನ್ನು ಕೇಳಿ ಅದಕ್ಕೆ ಮೂರು ವಿಧವಾದ ಭಿನ್ನ ಉತ್ತರಗಳನ್ನು ಕೊಡಲಾಗಿದೆ.

೮. ದ್ವೇ ಬಾಧೇತೇ ಸದಾ ಜಂತೂನ್ ದ್ವೇ ವರ್ಧೇತೇ ಪ್ರತಿಕ್ಷಣಮ್ ।
ಪ್ರತಿಕ್ಷಣಂ ನಶ್ಯತೋ ದ್ವೇ ಶ್ರೀನಿವಾಸಕೃತಂ ಮಹತ್ ॥

ಯಾವಾಗಲೂ ಮನುಷ್ಯಾದಿ ಪ್ರಾಣಿವರ್ಗಗಳನ್ನೆಲ್ಲಾ ಎರಡು (ವಿಷಯಗಳು) ಬಾಧಿಸುತ್ತವೆ. ಅಂತೆಯೇ ಪ್ರತಿ ನಿಮಿಷದಲ್ಲಿಯೂ ಎರಡು ವೃದ್ಧಿಯನ್ನು ಹೊಂದುತ್ತವೆ. ಪ್ರತಿಕ್ಷಣದಲ್ಲೂ ಎರಡು ನಾಶವಾಗುತ್ತವೆ. ಇವುಗಳು ಯಾವುವು?

೯. ದ್ವೇ ಬಾಧೇತೇ ಸದಾ ಜಂತೂನ್ ಕ್ಷುಧಾ ತೃಷ್ಣಾ ವಿಶೇಷತಃ ।
ಸುಕೃತಂ ದುಷ್ಕೃತಂ ಚೈವ ದ್ವೇ ವರ್ಧೇತೇ ಪ್ರತಿಕ್ಷಣಮ್ ॥

ಮನುಷ್ಯ ಹಾಗೂ ಪ್ರಾಣಿವರ್ಗಗಳಿಗೆ ಆಹಾರ ಸೇವನೆ ಹಾಗೂ ಜಲಪಾನ ಇವೆರಡೂ ಅತಿ ಮುಖ್ಯ. ಒಂದು ದಿನ ಆಹಾರವಿಲ್ಲದಿದ್ದರೂ, ಕುಡಿಯಲು ನೀರಿಲ್ಲದಿದ್ದರೂ ಮನುಷ್ಯನು ತುಂಬಾ ಬಳಲುತ್ತಾನೆ. ಅವುಗಳನ್ನು ತುಂಬಾ ಅವಶ್ಯವಾಗಿ ದಿನನಿತ್ಯ ಉಪಯೋಗಿಸಬೇಕು. ಅವುಗಳು ಸಿಗದಿದ್ದರೆ ಮನುಷ್ಯ ತುಂಬಾ ಬಾಧೆಗೊಳಗಾಗುವುದರಿಂದಲೇ ಅವೆರಡೂ ಮನುಷ್ಯನನ್ನು ಬಾಧಿಸುತ್ತವೆ.

ಒಮ್ಮೆ ಒಳ್ಳೆಯ ಕಾರ್ಯವನ್ನು ಮಾಡಿ ಪುಣ್ಯವನ್ನು ಗಳಿಸಿಕೊಳ್ಳುವಿಕೆ ಅಥವಾ ದುಷ್ಕೃತ್ಯವನ್ನು ಆಚರಿಸಿ ಪಾಪವನ್ನು ಗಳಿಸಿಕೊಳ್ಳುವಿಕೆ, ಈ ಎರಡು ಪುಣ್ಯ ಮತ್ತು ಪಾಪಗಳು ನಮಗರಿವಿಲ್ಲದಂತೆಯೇ (ಬ್ಯಾಂಕಿನಲ್ಲಿ ಡಿಪಾಸಿಟ್ ಮಾಡಿದ ಅಸಲು ಹಣಕ್ಕೆ ಬಡ್ಡಿಯು ವೃದ್ಧಿಸುವಂತೆ) ವೃದ್ಧಿ ಹೊಂದುತ್ತವೆ. ಅದರ ಪರಿಣಾಮವಾಗಿ ನಾವು ಸುಖದುಃಖಗಳನ್ನು ಪಡಬೇಕಾಗುತ್ತದೆ. ಆದುದರಿಂದ ಮನುಷ್ಯ ಸದಾ ವೃದ್ಧಿ ಹೊಂದತಕ್ಕ ಸುಕೃತವನ್ನೇ ಮಾಡಬೇಕೆಂಬುದೇ ಕವಿಯ ಆಶಯ.

೧೦. ಪ್ರತಿಕ್ಷಣಂ ನಶ್ಯತೋ ದ್ವೇ ಯಥಾ ಚಾಯುಸ್ತಥಾ ವಯಃ ।
ವಸ್ತುದ್ವಯತ್ರಿಕಂ ತ್ರೇಧಾ ಜ್ಞೇಯಮಿತ್ಥಂ ಮನೀಷಿಭಿಃ ॥

ಮನುಷ್ಯನಿಗೆ ಪರಮಾತ್ಮನು ಕರುಣಿಸಿರುವ ಎರಡು ವರಗಳೆಂದರೆ ಆಯುಷ್ಯ ಹಾಗೂ ವಯಸ್ಸು. ಇವು ಬಾಲ್ಯದಿಂದ ವೃದ್ಧರಾಗುವವರೆವಿಗೂ ಪ್ರತಿಕ್ಷಣದಲ್ಲಿಯೂ ನಾಶ

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

ವಾಗುತ್ತಾ ಇರುತ್ತವೆ. ಬೆಳಗ್ಗೆ ೮ ಗಂಟೆಗೆ ಇದ್ದ ವಯಸ್ಸು ಹಾಗೂ ಆಯುಸ್ಸಿನ ೮-೦೫ ಕ್ಕೆ ಕಡಿಮೆಯಾಗುತ್ತದೆ. ಹೀಗೆ ಕಾಲ ಗತಿಸಿದಂತೆಲ್ಲಾ ನಾವು ಸಮಾಧಿಯ ಹತ್ತಿರ ಹತ್ತಿರಕ್ಕೆ ಹೋಗುತ್ತಿರುತ್ತೇವೆ. ಆದುದರಿಂದ ಇವೆರಡೂ ಒಳ್ಳೆಯ ಸ್ಥಿತಿಯಲ್ಲಿದ್ದಾಗಲೇ ಎಚ್ಚರದಿಂದ ಸುಕೃತ ಸಂಪಾದನೆಯನ್ನು ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಇದೇ ಮೂರನೆಯ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರ. ಹೀಗೆ ಮೂರು ಪ್ರಶ್ನೆಗಳಿಗೂ ಭಿನ್ನಭಿನ್ನವಾದ ಮೂರು ಉತ್ತರಗಳನ್ನು ಕೊಡಲಾಗಿದೆ.

೧೧. ಉಪೇಕ್ಷಿತುಂ ನ ಯೋಗ್ಯೌ ದ್ವೌ ದ್ವೌ ನ ಯೋಗ್ಯೌ ಪರೀಕ್ಷಿತುಮ್ ।
ಶಿಕ್ಷಿತುಂ ದ್ವೌ ನ ಯೋಗ್ಯೌ ಚ ಶ್ರೀನಿವಾಸಕೃತಂ ಮಹತ್ ॥

ಹಿಂದಿನಂತೆಯೇ ಮತ್ತೆ ಮೂರು ಪ್ರಶ್ನೆಗಳನ್ನು ಕೇಳಲಾಗಿದೆ. ಮನುಷ್ಯ ಯಾವಾಗಲೂ ಎರಡರ ಬಗೆಗೆ ಉದಾಸೀನದಿಂದಿರಬಾರದು. ಅವು ಯಾವುವು? ಎರಡನ್ನು (ಈರ್ವರನ್ನು) ಪರೀಕ್ಷಿಸಲಿಕ್ಕೆ ಹೋಗಬಾರದು, ಮತ್ತು ಈರ್ವರಿಗೆ ಎಂತಹ ಕಾಲದಲ್ಲಿಯೂ ಶಿಕ್ಷೆಯನ್ನು ಕೊಡಬಾರದು. ಇವುಗಳು ಯಾವುವು ?

೧೨. ಉಪೇಕ್ಷಿತುಂ ನ ಯೋಗ್ಯೌ ದ್ವೌ ಯಥಾ ಶತ್ರುಸ್ತಥಾ ಸಖಾ ।
ಯಥಾ ಗುರುಸ್ತಥಾ ನಾಥೋ ದ್ವೌ ನ ಯೋಗ್ಯೌ ಪರೀಕ್ಷಿತುಮ್ ॥

ಶತ್ರು ಹಾಗೂ ಮಿತ್ರರನ್ನು ಉಪೇಕ್ಷಿಸಬಾರದು, ಉದಾಸೀನಭಾವದಿಂದಿರಬಾರದು. ಶತ್ರು ತುಂಬಾ ದುರ್ಬಲನಾಗಿದ್ದಾನೆ, ಅವನಿಂದ ಯಾವ ತೊಂದರೆಯೂ ಉಂಟಾಗಲಾರದು ಎಂದು ಉದಾಸೀನ ಮಾಡಿದರೆ ಒಂದಲ್ಲ ಒಂದು ದಿನ ಅವನೇ ಪ್ರಬಲನಾಗಿ ತೊಂದರೆ ಕೊಡಬಹುದು. ಅಂತೆಯೇ ಒಮ್ಮೆ ಮಿತ್ರನ ಸ್ನೇಹವನ್ನು ಗಳಿಸಿಕೊಂಡನಂತರ, ಪ್ರಬಲನಾಗಿರುವ ನನಗೆ ಅವನಿಂದ ಏನು ಪ್ರಯೋಜನವಾದೀತು ಎಂದು ಮಿತ್ರನನ್ನು ಉದಾಸೀನಭಾವದಿಂದ ನೋಡಬಾರದು. ಸಮಯದಲ್ಲಿ ಒಂದು ಹುಲ್ಲುಕಡ್ಡಿಯೂ ಸಹಾಯಕ್ಕೆ ಬೇಕಾಗುತ್ತದೆ. ಹೀಗೆ ಶತ್ರುಮಿತ್ರರನ್ನು ಉಪೇಕ್ಷಿಸಬಾರದು.

ಗುರು ಹಾಗೂ ಸ್ವಾಮಿ (ಒಡೆಯ, ಯಜಮಾನ) ಇವರುಗಳನ್ನು ಸಂಶಯದಿಂದ ಪರೀಕ್ಷಿಸಬಾರದು. ಗುರುವಿನ ಸ್ಥಾನ ತುಂಬಾ ಉನ್ನತವಾಗಿಯೇ ಇದ್ದು, ಅವನು ಯಾವಾಗಲೂ ಶಿಷ್ಯನ ಕ್ಷೇಮವನ್ನೇ ಚಿಂತಿಸುತ್ತಾ ಅವನ ಅಭ್ಯುದಯಕ್ಕಾಗಿ ಶ್ರಮಿಸುತ್ತಿರುತ್ತಾನೆ. ಅಂತಹವರನ್ನು ಸಂಶಯಾತ್ಮಕಭಾವದಿಂದ ನೋಡಿದರೆ ಕೆಡುಕಾಗುತ್ತದೆ. ಯಜಮಾನನೂ ಅಂತೆಯೇ ತನ್ನ ಸೇವಕನ ವೃದ್ಧಿಕ್ಷೇಮಗಳಿಗೆ ಸದಾ ಪ್ರಾಧಾನ್ಯವನ್ನು ಕೊಡುವತ್ತ ಚಿಂತಿಸುತ್ತಿರುತ್ತಾನೆ. ಈರ್ವರ ವಿಷಯದಲ್ಲೂ ಏಕಭಾವದಿಂದ ವಿಧೇಯರಾಗಿ ವರ್ತಿಸಬೇಕು.

CC-0. Oriental Reasearch Library, Mysore. Digitized by Sri Muthulakshmi Research Academy

